आशाधर त्वं मयि विद्धि सिद्धं निसर्ग
सरस्वतीपुत्रतया यदेतदर्थे परं वाच्यम
[illegible] मित्रो [illegible] सरस्वतीपुत्रतया [illegible] दर्यं प्रकृत्यै
इत्युपश्लोकितो [illegible] कवीशि
श्रीविन्ध्यभूपति[illegible] य

इति उपश्लोकित श्लोकनापस्नत । श्रीविन्ध्यभूपति विज
मालवाधिपति ॥ ७ ॥

श्रीमदर्जुनभूपालराज्य श्रावकसंकुले ।
जिनधर्मोदयार्थं यो नलकच्छपुरेऽवसत् ॥ ८ ॥

यो द्राग्व्याकरणाब्धिपारमनयच्छुश्रूषमाणान्न कान
सत्तर्कं परमास्त्रमाप्य न यतः प्रत्यर्थिनः केऽक्षिपन् ।
चेरुः केऽस्खलितं न येन जिनवाग्दीपं पथि ग्राहिताः
पीत्वा काव्यसुधां यतश्च रसिकेष्वापुः प्रतिष्ठां न के ॥ ९ ॥

कान् पंडितदेवचन्द्रादीन प्रत्यर्थिन प्रतिवादिन । क वादीन्द्रविशाल
कीर्त्यादय अक्षिपन् जयंति स्म चरु प्रवृत्ता । के भट्टारकदेवविनयभद्रादय ।
अस्खलित निरतिचार । जिनवाक अर्हत्प्रवचन । पथि मोक्षमार्गे ग्राहिताः
स्वीकारिता । रसिकेषु सहृदयविदग्धेषु मध्ये । आपु प्राप्ता । के बालसर-
स्वतीमहाकविमदनादय ॥ ९ ॥

स्याद्वादविद्याविशदप्रसादः प्रमेयरत्नाकरनामधेयः ।
तर्कप्रबन्धो निरवद्यविद्यापीयूषपूरो वहति स्म यस्मात् ॥ १० ॥

सिध्यङ्क भरतेश्वराभ्युदयसत्काव्यं निबन्धोज्ज्वलं
यस्त्रैविद्यकवीन्द्रमोहनमयं स्वश्रेयसेऽरीरचत् ।
योऽर्हद्वाक्यरसं निबन्धरुचिरं शास्त्रं च धर्मामृतं
निर्माय न्यदधान्मुमुक्षुविदुषामानन्दसान्द्रे हृदि ॥ ११ ॥

सिध्यङ्कं सिद्धि सिद्धशब्दोऽङ्कश्चिह्नं सर्गप्रान्तवृत्तेषु यस्य तत् । [illegible]
उज्ज्वलं स्वयंकृतनिबन्धनेन स्फुटप्रतिभासं । अरीरचत् रचयति स्म । [illegible]